*samskrita vyakaranam* Search this site



14 - समासः >

# 01 - समासपरिचयः

२०२० ध्वनिमुद्राणि -

१) samAsaparichayaH_2020-03-20

२) samAsah+abhyAsah+samartha padavidhiHi_2020-03-28

३) samAsah- adhikArasutrANi+vrittiH+ vibhAShA _ 2020-04-04

समासज्ञानं विना समस्त-संस्कृत-वाङ्गमय-ज्ञानं भवितुं एव न अर्हति। संस्कृतभाषायां समासस्य प्रयोगः शास्त्रेषु, काव्येषु, वाक्येषु सर्वत्र दृश्यते । संस्कृतभाषायाः सम्यगवगमनार्थं समासस्य अध्ययनम् अत्यावश्यकम्।

समासः नाम कः?

**अनेकस्य पदस्य एकपदीभवनं** समासः इत्युच्यते । द्वयोः अथवा बहूनां पदानां मेलनेन यदा एकं पदं निष्पन्नं भवति तदा समासः इत्युच्यते । अर्थात् द्वयोः अथवा बहूनां पदनां मेलनेन एकार्थीभावः उत्पद्यते चेत् समासः इति कथ्यते । एकार्थीभाव-रूप सामर्थ्यम् अस्ति चेत् एव समासः भवति । यदा पदार्थानां मेलनेन एकार्थस्य बोधः जायते तदा समासे एकार्थीभाव-रूप-सामर्थ्यम् अस्ति इति वदामः । एकार्थी-भाव-सामार्थ्यस्य

अभावे समासः न भवति, केवलं संहिता एव ।

यथा– सीतायाः पतिः

सीतायाः इति षष्ठ्यन्तं पदम् अस्ति , पतिः इति प्रथमान्तं पदम् अस्ति । एतयोः पदयोः मेलनेन सीतापतिः इति समासः भवति। सीता इति पदस्य कश्चित् अर्थः अस्ति, पतिः इति पदस्य अपि कश्चित् अर्थः अस्ति । अधुना यदा अनयोः पदयोः योजनेन समासः क्रियते तदा नूतनार्थः निष्पद्यते । सीतापतिः नाम कश्चन पुरुषः यः सीतायाः पतिः अस्ति । एतदेव एकार्थीभावसामर्थ्यम् इति उच्यते। समासे क्रियमाणे पदद्वयम् एकपदी भूत्वा विशिष्टम् अर्थं बोधयति, तदेव एकार्थी-भाव-रूप सामर्थ्यम् इति कथ्यते । **ऐकपद्यमैकस्वर्यं च समासस्य लक्षणं भवति ।**

समासः इति पदस्य विग्रहवाक्यम् अस्ति समसनम् इति समासः । सम् +असुँ क्षेपने इति धातुतः घञ् इति प्रत्ययं योजयित्वा समासः इति पदं निष्पन्नं भवति। सम् +असुँ क्षेपने इति धातुतः ल्युट् इति प्रत्ययं योजयित्वा समसनम् इति पदं निष्पन्नं भवति ।

सुबन्तानाम् एव समासः भवति। वेदेषु तिङन्तानाम् अपि समासः भवति । परन्तु लोके सामान्यतया सुबन्तानामेव समासः भवति। समासः युगपत् द्वयोः द्वयोः सुबन्तयोः एव भवति । द्वन्द्वसमासे, बहुव्रीहिसमासे च युगपत् बहूनां पदानाम् अपि समासः भवति । परस्परान्वितयोः सुबन्तयोः एव समासः भवति। समासे पूर्वत्र श्रूयमाणं पदं पूर्वपदमिति, उत्तरत्र श्रूयमाणं पदम् उत्तरपदमिति च व्यवह्रियते । समासे जाते पूर्वपदम् उत्तपदं च प्रातिपदिकरूपेण स्थितं भवति। ततः समस्तात् पदात् विभक्तिः योजनीया । समासप्रक्रिया अग्रे प्रदर्श्यते ।

समासे सर्वदा अर्थस्य प्राधान्यम् अस्ति । समासस्य अर्थं बोधयितुं विग्रहवाक्यम् उच्यते । समासस्य अर्थम् अवलम्ब्य एव विग्रहवाक्यं वक्तव्यम् । अर्थस्य ज्ञानं विना समासं वक्तुं न शक्यते। सर्वदा प्रसङ्गम् अवलम्ब्य विग्रहः वक्तव्यः । तर्हि समासाध्ययने अस्माकं प्रथमं कार्यम् अस्ति समासस्य अर्थावगमनम् । अर्थं ज्ञात्वा समाससूत्राणां साहाय्येन सुलभतया विग्रहवाक्यं कथं भवति, समासः कः इति ज्ञातुं शक्नुमः ।

विग्रहवाक्यं नाम किम्?

वृत्त्यर्थावबोधकं वाक्यं विग्रहः इति उच्यते। समासे अर्थं बोधयितुं यद् वाक्यं उच्यते तद् वाक्यं विग्रहः इति व्यवह्रियते । विग्रहः द्विविधा भवति - लौकिकविग्रहः, अलौकिकविग्रहः चेति। येन वाक्येन समस्तपदस्य अर्थः अवगम्यते तद्वाक्यं लौकिकविग्रहवाक्यम् इति उच्यते । यथा – सीतापतिः इति समासे, सीतायाः पतिः इति लौकिक-विग्रहवाक्यम् अस्ति । लोके प्रयोक्तुम् अर्हाणां पदानाम् अभावे अलौकिक-विग्रहवाक्यम् इति कथयामः । सीता +ङस् + पति+सु इति अलौकिक-विग्रहवाक्यम् । यत्र प्रकृति-प्रत्ययविभागः क्रियते तत्र अलौकिक-विग्रहः अथवा शास्त्रीयविग्रहः इति कथ्यते। अलौकिक-विग्रहवाक्यं समासप्रक्रियायां प्रयुज्यते न तु लोके । लोके अलौकिक-विग्रहवाक्यस्य अर्थबोधः न जायते। व्याकरणे एव अलौकिक-विग्रहवाक्यस्य प्रयोगः क्रियते । अलौकिकविग्रहवाक्ये प्रकृति-प्रत्यय-विभागः क्रियते समस्तपदस्य रूपसाधनार्थम्।

विग्रहः स्वपदविग्रहः अस्वपदविग्रहः इति द्वेधा विभज्यते। स्वपदविग्रहः नाम समासस्य अर्थः समासघटकैः पदैः वर्ण्यते तदा स्वपदविग्रहः इति उच्यते। समासघटकपदसहितं वाक्यं स्वपदविग्रहः इत्यर्थः। यथा - ग्रामगतः इति समासः। ग्रामं गतः इति स्वपदविग्रहः। अस्वपदविग्रहः नाम समास्स्य अर्थः समासघटकानि पदानि विहाय अन्यपदैः यदा वर्ण्यते तदा अस्वपदविग्रहः इति उच्यते। समासघटकपदरहितं वाक्यम् अस्वपदविग्रहः इति उच्यते। यथा उपकृष्णम् इति अव्ययीभावसमासः। कृष्णस्य समीपम् इति अस्वपदविग्रहः। अत्र समीपम् इति पदं समासघटकं पदं नास्ति। एतादृशविग्रहः अस्वपदविग्रहः इति उच्यते।

एतेषु समासः अस्ति वा सन्धिः अस्ति वा इति वक्तव्यम् -१) मनोरथः, २) सूर्यदर्शनम्, ३) पुस्तकं, ४) नदीप्रवाहः, ५) शुद्धता, ६) गमनम् . ७) गङ्गायमुने, ८) देवकीनन्दः, ९) जलेऽस्मिन् , १०) ममाशा, ११) कार्यालयं, १२) लोकनाथः, १३) बहुफलः , १४) दर्शनं, १५) बन्धुर्गच्छति, १६ ) पुनस्स्मरणं, १७) देशसेवा, १८) साधुर्श्रूयते, १९) प्रतिनिधिरस्ति, २०) रामश्जयति ।

सम्प्रति अष्टाध्यायां समाससम्बद्धसूत्राणां विवरणं दीयते ।

## 1) समाससम्बद्धसूत्राणि

- समास-सम्बद्धसूत्राणि (२.१.१. – २.२.३८) – अष्टाध्यायां द्वितीयाध्याये समास-विधायक-सूत्राणि सन्ति ।
- समास-वचननिर्णय-सम्बद्धसूत्राणि (२.४.१ – २.४.१६) – अत्र समासस्य वचनस्य निर्णयः क्रियते। द्वितीयाध्यायस्य तृतीयपादे कारक-सम्बद्धसूत्राणि सन्ति। एतस्मिन् विषये कारकप्रकरणे पठिष्यामः ।
- समास-लिङ्गनिर्णय-सम्बद्धसूत्राणि (२.४.१७ – २.४.३४) – अत्र समासस्य लिङ्गस्य निर्णयः क्रियते।
- उत्तरपद-अधिकारः ( ६.३.1 - ६.३.१०८) - अयम् उत्तरपदाधिकारः अस्ति। अत्र ६.३.१ इत्यस्मात् सूत्रात् आरभ्य ६.३.२४ इति सूत्रपर्यन्तं पूर्वपदस्य विभक्तेः अलुक् भवति । उत्तरपदे इति अधिकारे सुब् -अलुक् इति एकं कार्यम् अस्ति। अस्मिन् अधिकारे उत्तरपदे परे कुत्र पूर्वपदस्य सुब्लुक् न भवति, कुत्र पूर्वपदे अन्यत् किमपि कार्यं भवति इति उच्यते । समासे कानिचन पदानि उत्तरपदे सन्ति चेत् कुत्रचित् पूर्वपदस्य विभक्तेः अलुक् भवति, कुत्रचित् पूर्वपदस्य परिवर्तनं भवति । एते विषयाः अस्मिन् अधिकारे उच्यन्ते । यत्र पूर्वपदस्य विभक्तेः अलुक् भवति तद् अलुक्-प्रकरणम् इति नाम्ना ज्ञायते । अस्मिन् अधिकारे यानि सूत्राणि सन्ति तेषां ज्ञानम् आवश्यकं समासस्य अध्ययनार्थम्। वयं केषाञ्चन सूत्राणाम् अध्ययनं कुर्मः प्रक्रियाकाले।

  यथा युधिष्ठिरः इति समस्तपदे पूर्वपदस्य विभक्तेः अलुक् अभवत्। अस्मिन् अधिकारे उत्तरपदे परे पूर्वपदस्य किं परिवर्तनं भवति इति उच्यते । किञ्चित् उत्तरपदम् अस्ति चेत् पूर्वपदे कानिचन कार्याणि भवितुम् अर्हन्ति यथा अलुक्, ह्रस्वत्वं, दीर्घत्वम् इत्यादीनि कार्याणि अस्मिन् अधिकारे पठ्यन्ते।

- समासान्ताधिकारः (५.४.६८ – ५.४.१६०) – अस्मिन् अधिकारे समासान्तप्रत्ययाः विधीयन्ते । समासान्तप्रत्ययाः तद्धिताधिकारे सन्ति इत्यतः एव समासान्तप्रत्ययाः अपि तद्धितप्रत्ययाः इत्येव परिगण्यन्ते । एते समासान्तप्रत्ययाः तद्धितसंज्ञकाः, समासस्य अन्ते

आयान्ति, अपि च समासस्य अवयवाः भवन्ति। अतः एव समासान्तप्रत्ययः इति नाम्ना ज्ञायते । वयं केषाञ्चन सूत्राणाम् अध्ययनं कुर्मः प्रक्रियाकाले ।

समासान्ताः समासस्य अवयवाः सन्ति इत्यतः एव समासान्तानां योजनानन्तरं सम्पूर्णस्य समस्तपदस्य प्रातिपदिकसंज्ञा भवति । यद्यपि एतानि कार्याणि समस्तपदस्य निर्माणे भवन्ति तथापि प्रक्रिया तु तद्धितप्रक्रियाम् आश्रित्य एव भवति । अर्थात् तद्धितान्तपदस्य निर्माणार्थं या प्रक्रिया आश्रयणीया भवति, समासप्रक्रियायाम् अपि समासान्तप्रत्ययं योजयित्वा सा एव प्रक्रिया आश्रयणीया भवति । अनेन कारणेन एव पाणिनिना एतानि सूत्राणि तद्धिताधिकारे स्थाप्यन्ते । समासान्तप्रत्ययाः समासस्य अन्ते तिष्ठन्ति इत्यतः एव एते समासस्य अवयवाः इति स्वीक्रियन्ते ।

ययोः कयोः अपि पदयोः समासः भवति किम्?

पदयोः मध्ये सामर्थ्यम् अस्ति चेदेव समासः विधीयते। समर्थानां पदानाम् एव समासः भवति इति नियमः । अत्र परिभाषासूत्रम् अस्ति **समर्थः पदविधिः** (२.१.१) इति ।

**समर्थः पदविधिः** (२.१.१) = पदसम्बन्धी यः विधिः सः समर्थाश्रितो भवेत् । समर्थानां पदानां सम्बद्धार्थानां विधिः इति ज्ञातव्यम् । विधिः नाम कार्यम् इत्यर्थः । एतत् सूत्रं परिभाषासूत्रम् अस्ति। एतस्य सूत्रस्य विषये अयं नियमः अस्ति यत् सम्पूर्णाष्टाध्यायां यत्र पदसम्बन्धी विधिः भवति तत्र सर्वत्र समर्थपदानाम् आश्रये एव कार्यं भवति, असमर्थपदानाम् आश्रये कार्यं न भवति। यद्यपि एतत् सूत्रं परिभाषासूत्रम् अस्ति तथापि अधिकारसूत्रम् इव एतस्य प्रसक्तिः सर्वत्र भवति यत्र पदसम्बन्धी कार्यम् अस्ति। पद-सम्बन्द्ध-कार्यं समर्थपदानाम् आश्रये एव भवति न तु असमर्थपदानाम् । समर्थः प्रथमान्तं, पदविधिः प्रथमान्तं, द्विपदमिदं सूत्रम् । पदस्य विधिः, पदविधिः, षष्ठीतत्पुरुषः । **सूत्रं स्वयं सम्पूर्णम् ।**

**समर्थः पदविधिः** (२.१.१) इति सूत्रे समर्थः अथवा सामर्थ्यम् इत्यस्य कोर्थः?

पदार्थानां परस्पर सबन्धः एव सामर्थ्यम् इति उच्यते। यत्र द्वयोः पदयोः मध्ये कश्चन सम्बन्धः विद्यते तत्र एव तयोः मध्ये सामर्थ्यम् अस्ति इति उच्यते । समर्थयोः पदयोः एव समासः भवति । तन्नाम परस्परान्वययुक्तयोः पदयोः एव समासः भवति । यथा 'सीतायाः पतिः' इति उदाहरणे, सीता, पतिः च, अनयोः पदयोः मध्ये परस्परान्वयः अस्ति, सम्बन्धः अस्ति, तस्मात् 'सीतापतिः' इति समस्तं पदं सिद्धं भवति। वाक्ये यदि अनयोः पदयोः सम्बन्धः नास्ति तर्हि सीतापतिः इति समासः न भवति एव ।

यदि सुवर्णस्य इति वदामः तर्हि आकाङ्क्षा भवति सुवर्णस्य किम् इति। तर्हि तस्य उत्तरं भवति कङ्कणम् इति। सुवर्णस्य किम् इत्यस्य आकाङ्क्षा पूरिता भवति कङ्कणम् इति वदनेन। सुवर्णं, कङ्कणम्, अनयोः पदयोः मध्ये परस्पर आकाङ्क्षा वर्तते अतः तयोः मध्ये सामर्थ्यम् अस्ति । अतः एव अनयोः पदसम्बन्धी कार्यं भवति । सुवर्णकङ्कणम् इति कर्मधारयसमासः।

परस्परान्वयरहितयोः पदयोः समासः न भवति । यथा - **इदं पुस्तकं सीतायाः, पतिः गीतायाः गच्छति**। अस्मिन् वाक्ये सीता अपि च पतिः, तयोः पदयोः मध्ये परस्परान्वयः नास्ति, अतः सीतापतिः इति समासः न भवति । यत्र परस्परान्वयो न स्यात् तत्रापि यदि समासः क्रियेत तर्हि असमर्थसमासः इति उच्यते ।

असम्बद्धानां पदानां समासः न क्रियते इति ज्ञातम् । अतः सर्वत्र पदानां सम्बन्धः अस्ति वा इति दृष्ट्वा एव समासः करणीयः।

सामर्थ्यं द्विप्रकारकं भवति – १) व्यपेक्षासामर्थ्यम्, २) एकार्थीभावसमार्थ्यं चेति ।

१) व्यपेक्षासामर्थ्यम् - वाक्ये पदानां मध्ये विद्यमानः परस्परान्वयः एव व्यपेक्षा नाम्ना ज्ञायते । अर्थात् वाक्ये पदानि स्वस्य अर्थं प्रतिपादयित्वा परस्पर सम्बन्धम् अपि अपेक्षन्ते। वाक्ये पदानि न केवलं स्वस्य अर्थं बोधयन्ति, अपि च अन्यैः पदैः सह सम्बन्धम् अपि दर्शयन्ति। वाक्येषु वयं

नूतनपदानि योजयितुम् अपि शक्नुमः, पदानि निष्कासयितुम् अपि शक्नुमः। प्रत्येकं पदं स्वतन्त्रं वर्तते इत्यतः अत्र न कोपि नियमः । एतादृशसामर्थ्यम् एव व्यपेक्षासामर्थ्यम् इति उच्यते। वाक्येषु एव व्यपेक्षासामर्थ्यम् उपलब्धं भवति ।

यथा रामः ग्रामं गच्छति इति वाक्ये यद्यपि प्रत्येकं पदस्य भिन्नार्थः; प्रत्येकं पदं स्वतन्त्रम् अस्ति, तथापि तयोः मध्ये सम्बन्धः अस्ति। रामः इति भिन्नं पदं, ग्रामं इति भिन्नं पदं, गच्छति इति भिन्नं पदं, वाक्ये तयोः मध्ये सम्बन्धः अस्ति । गच्छति इति क्रियापदम्। कः गच्छति रामः इति कर्ता गच्छति। किं फलं प्राप्तुं रामः गच्छति? गमनक्रियायाः फलं किम्। ग्रामं प्राप्तुं एव रामः गमनक्रियां करोति। अत्र ग्रामम् इति कर्मपदम् अस्ति। अस्मिन् वाक्ये व्यपेक्षासामर्थ्यं वर्तते यतोहि पदानां मध्ये सम्बन्धः अस्ति।

२) एकार्थीभावसामार्थ्यं - द्वयोः पदयोः योजनेन नूतनपदस्य निर्माणं भूत्वा यत्र विशिष्टार्थस्य बोधः भवति तत्र एकार्थीभावसामर्थ्यम् अस्ति इति उच्यते । पदानां मेलनेन एकार्थस्य बोधः यत्र भवति तत्र एकार्थीभावसामर्थ्यं भवति । यत्र पदानि स्वस्य प्रधानम् अर्थं त्यक्त्वा अथवा गौणीकृत्य अन्यम् अर्थं बोधयति तत्र एकार्थीभावसामर्थ्यं भवति । यत्र एकार्थीभावसामार्थ्यं वर्तते तत्र नूतनं पदं योजयितुं न शक्नुमः । वृत्तिषु एव एकार्थीभावसामार्थ्यं वर्तते। सर्वाणि भिन्नानि पदानि मिलित्वा एकपदं भवति। वृत्तिषु एव एकार्थीभावसामार्थ्यं भवति इति उक्तम्। तर्हि वृत्तिः नाम का इति अग्रे उच्यते ।

यथा राज्ञः पुरुषः इत्यस्मात् राजपुरुषः इति समस्तपदं निष्पन्नं भवति। राज्ञः इति पदं राजार्थं बोधयति तथा पुरुषः इति पदं पुरुष-शब्दार्थं बोधयति । किन्तु समासे कृते द्वाभ्यां पदाभ्याम् एकार्थकस्य बोधः जायते, अनेन राजपुरुषः राजसम्बन्धवान् पुरुषः इति विशिष्टः अर्थः प्रकटितः भवति । अनयोः पदयोः परस्पर सम्बन्धः अस्ति इति कारणेन एव राजपुरुषः इति समासः भवति।

**वृत्तिः** -

**परार्थाभिधानं वृत्तिः** इति उच्यते। यत्र अनेके शब्दाः एकीभूय विभिन्नम् अर्थं बोधयन्ति तत्र वृत्तिः अस्ति इति उच्यते। वृत्तिः इति एकं कार्यम् अस्ति व्याकरणे । वृत्तिः स्वार्थं विहाय नूतनम् अर्थं बोधयति ।

यथा पच्- धातुतः ण्वुल् -प्रत्ययः क्रियते चेत् पाचकः इति कृदन्तपदं निष्पन्नं भवति। पच् -धातुः पाकक्रियां बोधयति। अधुना पच्-धातुतः ण्वुल् प्रत्ययं योजयामः चेत् पाचकः इति नूतनः अर्थः निष्पन्नः भवति । पाचकः कर्तारं बोधयति। नाम यः पाकं करोति इति। धातुभ्यः कृत् -प्रत्ययः क्रियते चेत् कश्चन नूतनः अर्थः निष्पन्नः भवति। एतदेव वृत्तेः लक्षणम् । व्याकरणे पञ्चवृत्तयः सन्ति यत्र एकार्थीभावसामर्थ्यं वर्तते – १) कृद्वृत्तिः; २) तद्धितवृत्तिः; ३) एकशेषवृत्तिः; ४) समासवृत्तिः ५) सनादिवृत्तिः चेति । यत्र वृत्तिकार्यम् अस्ति तत्र **समर्थः पदविधिः** (२.१.१) इति सूत्रस्य प्रसक्तिः अस्ति यतोहि सामर्थ्यम् अस्ति चेत् एव वृत्तिकार्यं भवति।

वृत्तिनां प्रसङ्गे उच्यते यत् सविशेषणानां वृत्तिः न। वृत्तस्य विशेषणं योगः न । अर्थात् विशेषाणानां वृत्तिः न भवति । यदा हि वृत्तिः निष्पन्ना भवति तदा नूतनविशेषणस्य योजनं कर्तुं न शक्यते । यथा- राजपुरुषः इति समासः क्रियते चेत् तदनन्तरं वृद्धस्य इति पदं योजयितुं न शक्नुमः । किमर्थम् इति चेत् वृद्धस्य इति पदं राज्ञः इति पदस्य विशेषणम् अस्ति । यदि वृद्धराजपुरुषः इति समासः क्रियते तर्हि किं भवति ? वृद्धस्य इति पदस्य योजनेन प्रश्नः उदेति अत्र राजा वृद्धः वा नो चेत् पुरुषः वृद्धः वा इति । अनेन कारणेन एव एकवारं यदा समासः क्रियते तदानीं नूतनविशेषणं योजयितुं न शक्यते । अत्र नियमः अस्ति यत् सविशेषणानां वृत्तिः न भवति इति । अतः एव वृद्धराजपुरुषः इति समासः न भवति ।

## 2) समास-सम्बद्ध -अधिकारसूत्राणि

समासप्रकरणस्य आदौ पीठिकारूपेण त्रीणि अधिकारसूत्राणि सन्ति। **समर्थः पदविधिः** (२.१.१) इति एकं परिभाषासूत्रम् अपि अस्ति यस्य प्रसक्तिः समासप्रकरणे सर्वत्र भवति –

१) **समर्थः पदविधिः** (२.१.१); २) **सुबामन्त्रिते पराङ्गवत् स्वरे** (२.१.२); ३) **प्राक्कडारात्समासः** (२.१.३), ४) **सह सुपा** (२.१.४) चेति । एतैः सूत्रैः एव सुबन्तं पदं सुबन्तेन सह समस्यते, तस्य सामान्यसमास-संज्ञा च भवति। एतेषां विवरणम् अग्रे दीयते।

समर्थानां सुबन्तानां एव समासः भवति इति पूर्वमेव उक्तम् । अत्र परिभाषासूत्रम् अस्ति **समर्थः पदविधिः** (२.१.१) इति।

**१) समर्थः पदविधिः** (२.१.१) = पदसम्बन्धी यः विधिः सः समर्थाश्रितो भवेत् । समर्थानां पदानां सम्बद्धार्थानां विधिः इति ज्ञातव्यम्। पदसम्बन्द्ध-कार्यं समर्थपदानाम् आश्रये एव भवति न तु असमर्थपदानाम् । एतत् परिभाषासूत्रमस्ति। यद्यपि एतत् परिभाषासूत्रम् अस्ति तथापि एतस्य प्रसक्तिः सर्वत्र भवति यत्र पदसम्बन्धी विधिः अस्ति। समर्थः प्रथमान्तं, पदविधिः प्रथमान्तं, द्विपदमिदं सूत्रम्। पदस्य विधिः, पदविधिः, षष्ठीतत्पुरुषः। **सूत्रं स्वयं सम्पूर्णम्**।

**२) सुबामन्त्रिते पराङ्गवत् स्वरे**( २.१.२) = एतत् सूत्रं समासे स्वरस्य विषये उच्यते । स्वरोच्चारणविषयः अद्यत्वे वेदे एव दृश्यते न तु लोके इति कृत्वा इतोऽपि विवरणं न दीयते।

समाससंज्ञा विधीयते **प्राक्कडारात्समासः** (२.१.३) इति सूत्रेण -

**३) प्राक्कडारात्समासः** (२.१.३) = एतत् अधिकारसूत्रम् अस्ति। अस्मात् सूत्रात् आरभ्य **कडाराः कर्मधारये** (२.२.३८) इति सूत्रपर्यन्तं समासाधिकारः भवति। एतेन सूत्रेण समाससंज्ञा विधीयते । अग्रे यत् किमपि विधीयते तस्य नाम समासः इति। प्राक् अव्ययपदं, कडारात् पञ्चम्यन्तं, समासः प्रथमान्तं, त्रिपदमिदं सूत्रम्। सूत्रं स्वयं सम्पूर्णं— **प्राक् कडारात् समासः ।**

**४) सह सुपा** (२.१.४) = सुबन्तस्य समर्थसुबन्तेन सह समासः भवति। एतत् अधिकारसूत्रम् अस्ति। एतस्य अधिकारः सम्पूर्णसमासप्रकरणे

अस्ति। सह अव्ययपदं, सुपा तृतीयान्तं, द्विपदमिदं सूत्रम् । **प्रत्ययग्रहणे तदन्ता ग्राह्याः** (परिभाषा #२३) इति परिभाषया तदन्तविधिः भवति। अनेन सुपा इत्यनेन सुबन्तेन इत्यर्थः निष्पन्नः भवति । एवमेव सुप् इत्यनेन सुबन्तम् इत्यर्थः निष्पन्नः । **सुबामन्त्रिते पराङ्गवत् स्वरे** (२.१.२) इत्यस्मात् सूत्रात् सुप् इत्यस्य अनुवृत्तिः भवति । **प्राक्कडारात्समासः** (२.१.३) इत्यस्मात् सूत्रात् समासः इत्यस्य अनुवृत्तिः भवति। अनुवृत्ति-सहितसूत्रम्— **सुप् सुपा सह समासः।**

समाससम्बद्धसूत्रेषु सर्वत्र सुप् इत्युक्ते सुबन्तं पदं, सुपा इत्युक्ते सुबन्तेन पदेन इत्यर्थः स्वीकार्यः। सुबन्तं पदं नाम यस्य अन्ते सुप् -प्रत्ययः अस्ति तत्।

**केवलसमासः** – यः समासः विशिष्टसंज्ञाविनिर्मुक्तः सः समासः केवलसमासः इति उच्यते । व्यवहारे सुबन्तस्य समर्थसुबन्तेन सह समासः भवति चेत् तत्र केवलसमासः इति उच्यते । यत्र विशिष्ट-समास-संज्ञा ( तत्पुरुषः, द्वन्द्वः, अव्ययीभावः , बहुव्रीहिः) न विधीयते तत्र केवलसमासः इति उच्यते ।

यथा भूतपूर्वः इति समासः, तस्य विग्रहः पूर्वं भूतः इति अस्ति । अयं केवलसमासः यतोहि अत्र किमपि विशिष्टसमासविधायकं सूत्रं नास्ति येन विशिष्टसमाससंज्ञां कर्तुं शक्यते। केवलसमासः **सह सुपा** (२.१.४) इति सामान्यसूत्रेण विधीयते। काव्येषु अथवा शास्त्रेषु बहवः समासाः दृश्यन्ते। एते समासाः शिष्टैः प्रयुक्ताः, अतः कथञ्चित् तेषां साधुत्वं साधनीयं भवति। परन्तु तेषां साधुत्वं प्राप्तुं समासविधायकं सूत्रं नास्ति येन विशिष्टसमाससंज्ञां कर्तुं शक्यते। अतः एव एतेषां समासानां समर्थनं **सह सुपा** (२.१.४) इति सामान्यसूत्रेण क्रियते, अपि च तेषां नाम केवलसमासः इति ।

अग्रे एतैः विशिष्ट-अधिकार-सूत्रैः विशिष्टसमाससंज्ञाः विधीयन्ते। एतैः सूत्रैः कीदृशसमासः विहितः भवति, कीदृशेन पदेन सह, कस्मिन् अर्थे इत्यादीनां विषयानां विवरणं प्राप्तुं शक्यते ।

- अव्ययीभावसमासाधिकारः – २.१.५ – २.१.२१ इति सूत्रपर्यन्तम्। अस्मिन् अधिकारे अव्ययीभावसमासः इति विशिष्टसमाससंज्ञा विधीयते ।

- तत्पुरुषसमासाधिकारः – २.१.२२ – २.२.२२ इति सूत्रपर्यन्तम्। अस्मिन् अधिकारे तत्पुरुषसमासः इति विशिष्टसमाससंज्ञा विधीयते ।
- बहुव्रीहिसमासाधिकारः – २.२.२३ – २.२.२८ इति सूत्रपर्यन्तम्। अस्मिन् अधिकारे बहुव्रीहिसमासः इति विशिष्टसमाससंज्ञा विधीयते ।
- द्वन्द्वसमासाधिकारः – २.२.२९ - एकमेव सूत्रम् अस्ति अस्मिन् अधिकारे। अस्मिन् अधिकारे द्वन्द्वसमासः इति विशिष्टसमाससंज्ञा विधीयते ।

एकवारं समासस्य विशिष्टसंज्ञा विहिता चेत् तत्पश्चात् पूर्वनिपात–परनिपातप्रकरणे यानि सूत्राणि सन्ति तैः सूत्रैः निर्णीयते कस्य पदस्य पूर्व-परनिपातः भवति इति। एतानि पूर्व-परनिपात- सूत्राणि – २.२.३० इत्यस्मात् सूत्रात् आरभ्य २.२.३८ इति सूत्रपर्यन्तं वर्तन्ते। एतेषां पठनम् अग्रे भविष्यति।

**विकल्पाधिकारः** -

**विभाषा** (२.१.११) = एतद् अधिकारसूत्रम् अस्ति। एतस्य सूत्रस्य अधिकारः **अपपरिबहिरञ्चवः पञ्चम्या** (२.१.१२) इति सूत्रात् आरभ्य **कडाराः कर्मधारय** (२.२.३८) इति सूत्रपर्यन्तम् अस्ति। एतस्मात् सूत्रात् समासविधिः विकल्पेन भवति। एषा विभाषा '**महाविभाषा**' इति उच्यते यतोहि एतेन सूत्रेण यः विकल्पाधिकारः कृतः सः बृहदस्ति । एतस्य प्रसक्तिः सम्पूर्णसमासप्रकरणे अस्ति। विभाषा प्रथमान्तं, एकपदमिदं सूत्रम् । **सूत्रं स्वयं सम्पूर्णम्।**

यत्र समासः नित्यः तत्र **विभाषा (२.१.११)** इति सूत्रस्य प्रसक्तिः न भवति । **विभाषा (२.१.११)** इत्यस्मात् सूत्रात् प्राक् यानि सूत्राणि सन्ति तत्र सर्वत्र समासः नित्यः भवति । अव्ययीभावाधिकारे (२.१.५) इत्यस्मात् सूत्रात् आरभ्य (२.१.१०) इति सूत्रपर्यन्तं षट् सूत्राणि सन्ति यत्र **विभाषा (२.१.११)** इत्यस्य अधिकारः नास्ति, अतः एव तत्र समासः विकल्पेन न भवति अपि तु नित्यं भवति। अग्रेऽपि कुत्रचित् समासः नित्यं भवति यत्र **विभाषा (२.१.११)** इत्यस्य सूत्रस्य प्रसक्तिः नास्ति । सामन्यतः समासः विकल्पेन

भवति इत्युक्तम्। व्यस्तप्रयोगं अपि कर्तुं शक्यते, समस्तप्रयोगं अपि कर्तुं शक्यते। परन्तु कुत्रचित् समासः विकल्पेन न भवति अपि तु नित्यरूपेण भवति। अग्रे सूत्रस्य पठानावसरे परिशीलयामः कुत्र कुत्र समासः नित्यः इति ।

प्रायेण अविग्रहः अथवा अस्वपदविग्रहः नित्यसमासः इति उच्यते।

अविग्रहः = यस्य विग्रहः नास्ति सः अविग्रहः इति उच्यते। नाम विग्रहवाक्येन समासस्य अर्थबोधः न भवति। यथा कृष्णसर्पः इति नित्यसमासः अस्ति। अयं समासः नित्यसमासः यतोहि कृष्णः च असौ सर्पः च इति विग्रहवाक्येन समासस्य अर्थबोधः न जायते। किमर्थम् इति चेत् कृष्णसर्पः यः कोपि सर्पः नास्ति। कृष्णसर्पः विशिष्टः सर्पः (Cobra), जातिविशेषः इत्यर्थः। अस्य समासस्य विग्रहवाक्यं न भवति, व्यस्तप्रयोगः न भवति। कृष्णवर्णीयः यः सर्पः सः सर्पः भिन्नः, कृष्णसर्पः भिन्नः। अयं समासः नित्यः यतोहि तस्य विग्रहवाक्येन अर्थं बोधयितुं न शक्यते।

अस्वपदविग्रहः =यस्य समासस्य अस्वपदविग्रहः भवति तादृशसमासः अपि नित्यः इति उच्यते। नाम समास्स्य अर्थः समासघटकानि पदानि विहाय अन्यपदैः यदि वर्ण्यते तदा अस्वपदविग्रहः इति उच्यते। समासघटकपदरहितं वाक्यम् अस्वपदविग्रहः इति उच्यते। यथा उपकृष्णम् इति अव्ययीभावसमासः। कृष्णस्य समीपम् इति अस्वपदविग्रहः। अत्र समीपम् इति पदं समासघटकं पदं नास्ति। एतादृशविग्रहः अस्वपदविग्रहः इति उच्यते।

**उपसर्जनसंज्ञा -**

समासे द्वयोः पदयोः मध्ये किं पदं पूर्वं स्यात्, किं पदं परं स्यात् इति कथं निर्णीयते? तदर्थं पाणिनिना एका सुन्दरव्यवस्था कृता येन वयं सुलभतया ज्ञातुं शक्नुमः किं पदं पूर्वं स्यात् किं पदं परं स्यात् इति। समासे उपसर्जनम् इति काचित्संज्ञा वर्तते। यस्य उपसर्जनसंज्ञा भवति तत् पदं पूर्वं प्रयोक्तव्यम्। अतः समासे उपसर्जनस्य अभिज्ञानम् अत्यावश्यकम् । तर्हि उपसर्जनं नाम किम्? कस्य उपसर्जनसंज्ञा भवति ? एतस्य विवरणम् अग्रे

दीयते ।

अष्टाध्यायाम् उपसर्जनसंज्ञा सूत्रद्वयेन विधीयते। एकम् अस्ति **प्रथमानिर्दिष्टं समास उपसर्जनम्** (१.२.४३) इति सूत्रम्, अपरम् अस्ति **एकविभक्ति चापूर्वनिपाते** (१.२.४४) इति सूत्रम्। सूत्रस्य विवरणम् अधः लिखितम् अस्ति ।

**१) प्रथमानिर्दिष्टं समास उपसर्जनम्** (१.२.४३) = समासविधायकसूत्रे यत् पदं प्रथमा-विभक्तौ निर्दिष्टम् अस्ति, तस्य पदस्य उपसर्जन-संज्ञा भवति। इदं संज्ञा-सूत्रम् अस्ति। प्रथमानिर्दिष्टं प्रथमान्तं, उपसर्जनं प्रथमान्तं, समासे सप्तम्यन्तं, त्रिपदमिदाम् सूत्रम् । अनुवृत्ति-सहित-सूत्रम्— **प्रथमानिर्दिष्टं समास उपसर्जनम्।**

समासविधायकसूत्रेषु यत् पदं प्रथमाविभक्तौ निर्दिष्टम् अस्ति, तत् पदम् उपसर्जनसंज्ञकं भवति । यथा- **पञ्चमी भयेन** ( २.१.३७) इति पञ्चमी-तत्पुरुष-समास-विधायकसूत्रम् अस्ति । एतत् सूत्रं वदति पञ्चम्यन्तं सुबन्तं समर्थेन भयशब्देन सह समस्यते, तत्पुरुषश्च समासो भवति इति। अस्मिन् सूत्रे किं पदं प्रथमाविभक्तौ अस्ति ? पञ्चमी इति पदं प्रथमाविभक्तौ अस्ति, अतः तस्य उपसर्जनसंज्ञा भवति ।

यथा - चोरात् भयम् इति उदाहरणम्। अनयोः पदयोः समासं कर्तुम् इच्छामः । अनयोः पदयोः मध्ये भयम् इति एकं पदम् अस्ति, अतः **पञ्चमी भयेन** ( २.१.३७) इति सूत्रेण पञ्चमीतत्पुरुषसमासः विधीयते। अधुना अनयोः पदयोः मध्ये किं पदं पञ्चम्यन्तं पदम् ? चोरात् इति पदं एव पञ्चम्यन्तं पदम् इति कृत्वा चोरात् इति पदस्य एव उपसर्जनसंज्ञा भवति **प्रथमानिर्दिष्टं समास उपसर्जनम्** (१.२.४३) इति सूत्रेण। चोरात् इति पदस्य एव उपसर्जनसंज्ञा यतोहि **पञ्चमी भयेन** ( २.१.३७) इति सूत्रे पञ्चमी इति पदमेव प्रथमाविभक्त्यां निर्दिष्टम् अस्ति । अतः उदाहरणे अपि यत् पदं पञ्चम्याम् अस्ति तस्य एव उपसर्जनसंज्ञा भवति ।

उपसर्जनसंज्ञायाः फलं किम् ? उपसर्जनसंज्ञायाः फलं यत् यस्य उपसर्जनसंज्ञा भवति तस्य प्रयोगः समासे पूर्वं भवति। अर्थात्

उपसर्जनसंज्ञकस्य पदस्य समासे पूर्वनिपातः (पूर्वप्रयोगः) भवति । अत्र सूत्रम् अस्ति **उपसर्जनं पूर्वम्** ( २.२.३०) इति । समासे उपसर्जनसंज्ञकस्य पदस्य पूर्वनिपातः भवति।

**उपसर्जनं पूर्वम्** (२.२.३०) = उपसर्जनसंज्ञकः समासे पूर्वं प्रयोक्तव्यः। अनेन सूत्रेण यत् कार्यं भवति तस्य नाम पूर्वनिपातः अथवा पूर्वप्रयोगः इति । उपसर्जनं प्रथमान्तं, पूर्वं प्रथमान्तं, द्विपदमिदं सूत्रम् ।
**प्राक्कडारात्समासः** (२.१.३) इत्यस्मात् सूत्रात् समासः इत्यस्य अनुवृत्तिः भवति । अत्र समासः इति शब्दस्य विभक्तिपरिणामं कृत्वा सप्तमीविभक्तौ भवति । अनुवृत्ति-सहित-सूत्रम्— **समासे उपसर्जनं पूर्वम्।**

समासविधायकसूत्रे यत् पदं प्रथमाविभक्तौ अस्ति तस्य उपसर्जनसंज्ञा भवति **प्रथमानिर्दिष्टं समास उपसर्जनम्** (१.२.४३) इति सूत्रेण। तत्पश्चात् उपसर्जनसंज्ञकस्य पदस्य पूर्वनिपातः भवति **उपसर्जनं पूर्वम्** (२.२.३०) इति सूत्रेण ।

यथा **-** चोरात् भयम् । यथा पूर्वोक्तं चोरात् इति पदस्य उपसर्जनसंज्ञा भवति। तत्पश्चात् समासे चोरात् इति उपसर्जनसंज्ञकस्य पदस्य पूर्वप्रयोगः भवति **उपसर्जनं पूर्वम् (२.२.३०)** इति सूत्रेण । अतः एव चोरभयम् इति समासः निर्मीयते ।

अन्यत् उदाहरणम् -

**षष्ठी** (२.२.८) इति षष्ठी-तत्पुरुष-विधायाकसूत्रम् अस्ति । सूत्रं वदति षष्ठ्यन्तं सुबन्तं समर्थेन सुबन्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। अस्मिन् सूत्रे षष्ठी इति पदं प्रथमाविभक्तौ अस्ति, अतः तस्य उपसर्जनसंज्ञा भवति **प्रथमानिर्दिष्टं समास उपसर्जनम्** (१.२.४३) इति सूत्रेण । तदनन्तरम् **उपसर्जनं पूर्वम्** (२.२.३०) इति सूत्रेण तस्य पूर्वनिपातः भवति। नाम षष्ठ्यन्तस्य पदस्य पूर्वप्रयोगः भवति समासे इत्यर्थः।

सीतायाः पति इति विग्रहे, सीता इति पदस्य षष्ठी विभक्तिः अस्ति अतः

तस्य उपसर्जनसंज्ञा भवति **प्रथमानिर्दिष्टं समास उपसर्जनम्** (१.२.४३) इति सूत्रेण । तदनन्तरम् **उपसर्जनं पूर्वम्** (२.२.३०) इति सूत्रेण तस्य पदस्य पूर्वनिपातः भवति। अतः एव समासे सीता इति पदस्य प्रयोगः पूर्वं भवति । समासः तु सीतापतिः इति भवति । एतदेव उपसर्जनसंज्ञायाः प्रयोजनम्। यस्य उपसर्जनसंज्ञा भवति समासविधायकसूत्रे तस्य एव पूर्वप्रयोगः भवति। यदि एतादृशनियमः नास्ति तर्हि पतिसीता इत्यपि समासः भवितुम् अर्हति। तथा मा भूत् इति कृत्वा एव पाणिना उपसर्जनसंज्ञा कृता।

**प्रथमानिर्दिष्टं समास उपसर्जनम्** (१.२.४३), **उपसर्जनं पूर्वम्** (२.२.३०) इति द्वाभ्यां सूत्राभ्यां समासे किं पदं पूर्वं स्यात् इति ज्ञातुं शक्नुमः । समासे आदौ उपसर्जनस्य ज्ञानम् आवश्यकम् अस्ति।

उपसर्जनस्य विषये अन्यत् सूत्रम् अस्ति **एकविभक्ति चापूर्वनिपाते** (१.२.४४) इति -

**एकविभक्ति चापूर्वनिपाते** (१.२.४४) = विग्रहस्य अवस्थायां यत् पदं नियतविभक्त्यां भवति तस्य पूर्वनिपातात् भिन्नकार्ये कर्तव्ये उपसर्जनसंज्ञा भवति परन्तु तस्य पूर्वनिपातः न भवति। विग्रहवाक्यस्य दशायां यत् पदं नियतविभक्त्याम् अस्ति तस्य पूर्वनिपातात् भिन्नकार्ये कर्तव्ये उपसर्जनसंज्ञा भवति। इदं संज्ञा-सूत्रम् अस्ति। एका विभक्तिः यस्य तद् एकविभक्तिः, बहुव्रीहिः । पूर्वश्चासौ निपातश्चेति पूर्वनिपातः, कर्मधारयः । न पूर्वनिपातः अपूर्वनिपातः, तस्मिन्, अपपूर्वनिपाते, नञ्तत्पुरुषः। एकविभक्तिः प्रथमान्तं, चाव्ययम्, अपूर्वनिपाते सप्तम्यन्तम् । **प्रथमानिर्दिष्टं समास उपसर्जनम्** इत्यस्यमात् सूत्रात् समासः तथा उपसर्जनम् इत्यनयोः अनुवृत्तिः । अनुवृत्ति-सहित-सूत्रम्— **एकविभक्ति च अपूर्वनिपाते समासे उपसर्जनम् ।**

एक इति सूत्रस्थं पदं निश्चितार्थे स्वीक्रियते । एकविभक्तिः इत्युक्ते नियतविभक्तिमत् पदम् इति। यस्य पदस्य विभक्तिः निश्चिता भवति तत् पदमेव एकविभक्तिमत् पदम् इति कथ्यते। यदा समासे द्वयोः पदयोः मध्ये एकं पदं नियतविभक्त्याम् अस्ति, अन्यस्य पदस्य विभक्तेः परिवर्तनं भवितुम् अर्हति, अस्यां स्थित्यां यस्य पदस्य विभक्तेः परिवर्तनं न भवति

तत् पदमेव नियतविभक्तिकम्।

**एकविभक्ति चापूर्वनिपाते** (१.२.४४) इति सूत्रेण यत् पदं नियतविभक्त्याम् अस्ति तस्य उपसर्जनसंज्ञा भवति परन्तु पूर्वनिपातः न भवति। तर्हि उपसर्जनस्य का आवश्यकता, तस्य प्रयोजनम् किम् ?

समाधानम् अस्ति यत् उपसर्जनसंज्ञकस्य शब्दस्य ह्रस्वादेशः भवति **गोस्त्रियोरुपसर्जनस्य** (१.२.४८) इति सूत्रेण परन्तु तस्य पूर्वनिपातनं न भवति । **गोस्त्रियोरुपसर्जनस्य** (१.२.४८) इति सूत्रं वदति गो-शब्दः स्त्रीलिङ्गशब्दः च उपसर्जनसंज्ञकः चेत् तदन्तस्य प्रातिपदिकस्य ह्रस्वत्वं स्यात् इति । नाम अत्र अस्माकम् अवधानं **गोस्त्रियोरुपसर्जनस्य** (१.२.४८) इति सूत्रस्य विषये नास्ति परन्तु यत्र **एकविभक्ति चापूर्वनिपाते** (१.२.४४) इति सूत्रस्य कार्यं भवति तत्र उपसर्जनसंज्ञकस्य पूर्वनिपातः इति प्रयोजनं नास्ति।

यथा - अतिक्रान्तः मालाम्, अतिक्रान्तेन मालाम्, अतिक्रान्ताय मालाम्, अतिक्रान्तात् मालाम्, अतिक्रान्तस्य मालाम् इत्यादिषु विग्रहवाक्येषु मालाम् इति पदं द्वितीयाविभक्त्याम् एव निश्चितरूपेण अस्ति। अति इति अव्ययम् अतिक्रान्तः इत्यस्मिन् अर्थे मालाम् इति द्वितीयान्तपदेन सह समस्यते।

माला इति पदं नियमितरूपेण द्वितीयाविभक्त्याम् एव भवति यतो हि **अत्यादयः क्रान्ताद्यर्थे द्वितीयया** इति वार्तिकेन अतिक्रान्त इति शब्दः द्वितीयान्तेन समर्थेन सुबन्तेन सह समस्यते, तत्पुरुषसमासः च भवति। अतः एव माला इति पदं द्वितीयायाम् एव भवति सर्वेषु विग्रहवाक्येषु । अतिमालः इति तत्पुरुषसमासः भवति। विग्रहवाक्ये अर्थम् अवलम्ब्य अतिक्रान्त इति प्रातिपदिकस्य विभक्तेः परिवर्तनं भवति ।

यथा -अतिमालः गच्छति। तस्य विग्रहः भवति मालाम् अतिक्रान्तः गच्छति।

अतिमालं पश्य। तस्य विग्रहः भवति मालाम् अतिक्रान्तं पश्य ।

अतिमालेन उक्तम् । तस्य विग्रहः भवति मालाम् अतिक्रान्तेन उक्तम्।

अतिमालाय देहि । तस्य विग्रहः भवति मालाम् अतिक्रान्ताय देहि ।

एवं विग्रहवाक्यानि लिखामः चेत् तदा अतिक्रान्त इति शब्दस्य विभक्तिः परिवर्त्यते, किन्तु मालाम् इति पदं सर्वदा द्वितीयाविभक्तौ एव भवति । मालाम् इत्येव एकविभक्तिकं पदम् अस्ति । विग्रहवाक्येषु यस्य पदस्य विभक्तिः न परिवर्त्यते, तादृशपदम् एकविभक्तिकम्। सर्वेषु विभक्तिषु यस्य पदस्य विभक्तिः न परिवर्त्यते तत्  पदम् उपसर्जनसंज्ञकं भवति **एकविभक्ति चापूर्वनिपाते** (१.२.४४) इति सूत्रेण ।

मालाम् इति पदे नियतविभक्तिकत्वम् अस्ति इत्यतः **एकविभक्ति चापूर्वनिपाते** (१.२.४४) इति सूत्रेण मालाम् इति पदस्य उपसर्जनसंज्ञा भवति, परन्तु तेन एव सूत्रेण उक्तं यत् समासे उपसर्जनसंज्ञकस्य पूर्वनिपातः न भवति । अत्र उपसर्जनसंज्ञायाः प्रयोजनं पूर्वनिपातः नास्ति यतोहि अत्र पूर्वनिपातः निषिध्यते । तर्हि उपसर्जनसंज्ञायाः प्रयोजनम् अस्ति यत् **गोस्त्रियोरुपसर्जनस्य** (१.२.४८) इति सूत्रेण माला इति स्त्रिलिङ्गशब्दस्य ह्रस्वत्वं भवति ।  अतः अतिमालः इति समासः निष्पद्यते ।

अतिमालः इति समस्तपदस्य निर्माणं कथं भवति इति अग्रे तत्पुरुषसमासे द्रक्ष्यामः। अत्रः अस्माकं लक्ष्यं **एकविभक्ति चापूर्वनिपाते** (१.२.४४) इति सूत्रस्य अर्थावगमनमेव।
**एकविभक्ति चापूर्वनिपाते** (१.२.४४) इति सूत्रेण यत् पदं नियतविभक्त्याम् अस्ति तस्य उपसर्जनसंज्ञा भवति परन्तु पूर्वनिपातः न भवति।

### 3) समासप्रक्रियाः सामान्यचिन्तनम्

i) समासः सर्वदा समर्थानां सुबन्तानाम् एव भवतिः। सुबन्तयोः एव समासो भवति ।

ii) समासे लौकिकविग्रहवाक्यम्, अलौकिकविग्रहवाक्यं च चिन्तनीयम् ।

a) लौकिकविग्रहवाक्येन समस्तपदस्य अर्थः अवगमयते। यथा 'भवच्चक्षुः' समस्तपदस्य कृते 'भवतः चक्षुः' इति लौकिकविग्रहवाक्यं भवति |

b) अलौकिकविग्रहवाक्येन समासनिर्माणं सिद्ध्यति | यथा 'भवच्चक्षुः' समस्तपदस्य कृते 'भवत् + ङस् + चक्षु + सु' इति भवति | समासप्रक्रिया आराब्धा भवति अलौकिकविग्रहवाक्यात्। अतः सर्वप्रथमम् अलौकिकविग्रहवाक्यं चिन्तनीयम् ।

iii) आदौ समाससंज्ञा विधीयते **प्राक्कडारात्समासः** (२.१.३) इति सूत्रेण । तदनन्तरं विशिष्टसमाससंज्ञा विधीयते विशिष्टसमासविधायकसूत्रैः, यथा तत्पुरुषसंज्ञा, द्वन्द्वसंज्ञा,
बहुव्रीहिसंज्ञा, अव्ययीभावसंज्ञा इत्यादयः ।

iv) समस्तपदस्य निर्माणार्थं विधायकसूत्रस्य आवश्यकता अस्ति। समासस्य विधायकसूत्राणि द्वितीयाध्यायस्य प्रथमपादे, द्वितीयपादे च सन्ति।

v) समासस्य प्रातिपदिकसंज्ञा भवति **कृत्तद्धितसमासाश्च** (१.२.४६) इत्यनेन सूत्रेण।

vi) तत्पश्चात् विभक्तेः लोपश्च भवति **सुपो धातुप्रातिपदिकयोः** (२.४.७१) इत्यनेन सूत्रेण । **कृत्तद्धितसमासाश्च** (१.२.४६) इत्यनेन समासस्य प्रातिपदिकसंज्ञा अस्ति इति कारणेन
प्रातिपदिकस्य अवयवरूपेण विद्यमानानां सुप्-प्रत्ययानां लुक् भवति **सुपो धातुप्रातिपदिकयोः** (२.४.७१) इत्यनेन सूत्रेण |

vii) यदा हि सुप् प्रत्ययानां लोपः जायते तदा प्रश्नः उदेति यत् सुप् प्रत्ययानां लोपानन्तरम् अपि पूर्वपदस्य पदसंज्ञा अस्ति वा प्रातिपदिकसंज्ञा अस्ति वा इति? **प्रत्ययलोपे प्रत्ययलक्षणम्** (१.१.६२) इत्यनेन प्रत्ययस्य लोपानन्तरम् अपि प्रत्ययस्य लक्षणं तिष्ठति इत्यतः पूर्वपदस्य प्रातिपदिकसंज्ञा अपि अस्ति, पदसंज्ञा अपि अस्त्येव | अतः एव अष्टमाध्यायां द्वितीयपादे पदसम्बद्धसूत्राणां प्रसक्तिः अस्ति, कार्यं च भवति एव बहुत्र ।

viii) समासे उपसर्जनस्य अभिज्ञानम् आवश्यकम्। उपसर्जनस्य अभिज्ञानं भवति **प्रथमानिर्दिष्टं समास उपसर्जनम्** (१.२.४३) इति संज्ञासूत्रेण। यस्य पदस्य उपसर्जनसंज्ञा भवति तत् पदं पूर्वं तिष्ठति **उपसर्जनं पूर्वम्** (२.२.३०) इति सूत्रेण ।

- **प्रथमानिर्दिष्टं समास उपसर्जनम्** (१.२.४३) इति सूत्रं वदति – समासविधायकसूत्रे यत् पदं प्रथमा-विभक्तौ निर्दिष्टम् अस्ति तस्य उपसर्जनसंज्ञा भवति ।

- **उपसर्जनं पूर्वम्** (२.२.३०) इति सूत्रं वदति यस्य पदस्य उपसर्जन-संज्ञा भवति तस्य पूर्वनिपातः भवति।

ix) अग्रे समासस्य लिङ्गं वचनं च निर्णीयेते। अग्रिमेषु पाठेषु अनयोः चर्चा भविष्यति ।

x) समासस्य प्रातिपदिकसंज्ञा तिष्ठति इति कारणेन प्रातिपादिकात् पुनः सुबादयः विधीयन्ते **स्वौजसमौट्छष् ..**(४.१.२) इति सूत्रेण । तत्र वयं सुबन्तप्रकरणं प्रविशामः, अतः सुबन्तप्रकरणस्य सामान्यज्ञानम् अत्यावश्यकम् ।

xi) यथा पूर्वं चर्चितं यदा समासः निष्पद्यते तदा समासे नूतनानां विशेषणानां योजनं न अर्हति। यदा वृत्तिः निष्पन्ना तदा नूतनविशेषाणां योजनं न भवितुम् अर्हति ।

xii) समासे संहिता नित्या। अतः समासप्रक्रियायां यत्र सन्धिकार्यस्य प्रसक्तिः अस्ति तत्र सन्धिकार्यं करणीयमेव ।

xiii) समासप्रक्रियां कुत्रचित् समासान्तप्रत्ययः विधीयते। यःसमासान्तप्रत्ययः समासस्य अवयवः भवति । समासान्तप्रत्ययस्य विधानान्तरं सम्पूर्णस्य समासस्य प्रातिपदिकसंज्ञा भवति।

xiv) समासे कुत्रचित् उत्तरपदस्य प्रभावेन पूर्वपदस्य परिवर्तनं भवति। उत्तरपदे इति अधिकारे यानि सूत्राणि पठितानि, तेषां ज्ञानम् आवश्यकम् ।

अधुना एकं सरलम् उदाहरणं स्वीकृत्य समासप्रक्रिया कथं भवति इति परिशीलयामः-

**यथा- राजपुरुषः इति समस्तपदम्**

राज्ञः पुरुषः इति लौकिकविग्रहवाक्यम् ।

'राजन् + ङस् + पुरुष + सु' इति अलौकिकविग्रहवाक्यम् ।

राजन् + ङस् + पुरुष + सु → समाससंज्ञा भवति **प्राक्कडारात्समासः** (२.१.३) इति सूत्रेण। तदनन्तरं **तत्पुरुषः** (२.१.२२) इति सूत्रेण विशिष्ट -तत्पुरुषसंज्ञा विधीयते । **षष्ठी** (२.२.८) इति विधायकसूत्रेण राज्ञः इति षष्ठ्यन्तं सुबन्तं, पुरुषः इति समर्थेन सुबन्तेन सह समस्यते ।

राजन् + ङस् + पुरुष + सु → समासस्य प्रातिपदिकसंज्ञा भवति **कृत्तद्धितसमासाश्च** (१.२.४६) इत्यनेन सूत्रेण ।

राजन् + ङस् + पुरुष + सु → इदानीं सुप्-प्रत्ययौ लुकौ (लोपौ) भवतः **सुपो धातुप्रातिपदिकयोः** (२.४.७१) इत्यनेन ।

राजन् + ङस् + पुरुष + सु →इत्यस्मिन् ङस्, सु इत्यनयोः लुक् भवति → राजन् + पुरुष → **सुप्तिङन्तं पदम्** (१.४.१४) इत्यनेन यस्य अन्ते सुप्-प्रत्ययः अस्ति, तस्य पदसंज्ञा भवति । अत्र च 'राजन्' इत्यस्य अन्ते सुप् नास्ति; तर्हि प्रश्नः उदेति यत् तस्य पदसंज्ञा अस्ति न वा? उत्तरमस्ति यत् **प्रत्ययलोपे प्रत्ययलक्षणम्** (१.१.६२) इत्यनेन प्रत्ययस्य लोपानान्तरम् अपि प्रत्ययस्य लक्षणं तिष्ठति अतः पदसंज्ञा अस्त्येव |

राजन् + पुरुष → अत्र **प्रथमानिर्दिष्टं समास उपसर्जनम्** (१.२.४३) इति सूत्रेण प्रथमाविभक्त्यां यत् पदं निर्दिष्टम् अस्ति समासविधायकसूत्रे तस्य उपसर्जनसंज्ञा भवति । अत्र समासविधायकसूत्रम् अस्ति **षष्ठी** (२.२.८) इति । अस्मिन् सूत्रे षष्ठी इति पदं प्रथमाविभक्तौ अस्ति अतः तस्य उपसर्जनसंज्ञा भवति। अधुना **उपसर्जनं पूर्वम्** (२.२.३०) इति सूत्रेण उपसर्जनसंज्ञकपदस्य पूर्वनिपातः भवति । अस्माकम् उदाहरणे राजन् इति पदं षष्ठयन्तं पदम्, अतः तस्य उपसर्जनसंज्ञा भूत्वा तस्य पूर्वनिपातः भवति ।

राजन् + पुरुष → **न लोपः प्रातिपदिकान्तस्य** (८.२.७) इति सूत्रण प्रातिपदिकसंज्ञक-पदस्य अन्ते विद्यमानस्य नकारस्य लोपः। अत्र राजन् इति प्रातिपदिकस्य, पदस्य अन्ते विद्यमानस्य नकारस्य लोपः भवति → राज + पुरुष।

राज + पुरुष → इदानीं लिङ्गस्य वचनस्य च निर्णयः भवति। **परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः** (२.४.६) इत्यनेन समासे उत्तरपदस्य यत् लिङ्गम् अस्ति तदेव लिङ्गं भवति द्वन्द्वतत्पुरुषयोः । उत्तरपदम् अस्ति पुरुष- इति, तस्य लिङ्गं अस्ति पुल्लिङ्गम्, अतः राजपुरुष इति समस्तपदस्य लिङ्गं पुल्लिङ्गम् । राजपुरुष इत्यस्य वचनं भवति एकवचनम् । सामान्यतया समासः प्रथमपुरुषे एकवचने एव उच्यते तदनन्तरम् अस्माकं विवक्षानुगुणं वाक्ये समस्तपदस्य विभक्तेः परिवर्तनं कृत्वा प्रयोगः करणीयः।

राज + पुरुष +सु → **स्वौजसमौट्छष् ..**(४.१.२) इति सूत्रेण सुबुत्पत्तिः भवति। राजपुरुषः इति समस्तपदं सिद्धम्। सामान्यतया समासः प्रथमपुरुषैकवचने एव क्रियते । तदनन्तरं विवक्षानुगुणं विभक्तेः परिवर्तनं कृत्वा वाक्ये प्रयुज्यते।

**न लोपः प्रातिपदिकान्तस्य** (८.२.७) = प्रातिपदिकसंज्ञक-पदस्य अन्ते विद्यमानस्य नकारस्य लोपः | न लुप्तषष्ठीकं पदं, लोपः प्रथमान्तं, प्रातिपदिक लुप्तषष्ठीकं पदं, अन्तस्य षष्ठ्यन्तम्, अनेकपदमिदं सूत्रम् | पदस्य (८.१.१६) इत्यस्य अधिकारः | अनुवृत्ति-सहितसूत्रं—
**प्रातिपदिकस्य पदस्य अन्तस्य नः लोपः** |

**कृत्तद्धितसमासाश्च** (१.२.४६) = कृदन्ताः, तद्धितान्ताः, समासाः च अपि प्रातिपदिकसंज्ञकाः | कृच्च, तद्धितश्च, समासश्च, कृत्तद्धितसमासाः इतरेतरद्वन्द्वः | कृत्तद्धितसमासाः प्रथमान्तं, च अव्ययपदं, द्विपदमिदं सूत्रम् | अर्थवदधातुरप्रत्ययः प्रातिपदिकम् (१.२.४५) इत्यस्मात् अर्थवत्, प्रातिपदिकम् इत्यनयोः अनुवृत्तिः | अनुवृत्ति-सहित-सूत्रम्— **अर्थवन्तः कृत्तद्धितसमासाः च प्रातिपदिकानि** |

**सुपो धातुप्रातिपदिकयोः** (२.४.७१) = धातोः च प्रातिपदिकस्य च अवयवरूपेण विद्यमानस्य सुप्-प्रत्ययस्य लुक् भवति | यदि कश्चन सुप्-

प्रत्ययः कस्यचित् धातोः प्रातिपदिकस्य वा अवयवरूपेण विद्यमानः अस्ति, तर्हि तस्य सुप्-प्रत्ययस्य लुक् भवति | धातुश्च प्रातिपदिकं च तयोरितरेतरयोगद्वन्द्वः, धातुप्रातिपदिके, तयोर्धातुप्रातिपदिकयोः। सुपः षष्ठ्यन्तं, धातुप्रातिपदिकयोः षष्ठीद्विवचनान्तम्। ण्यक्षत्रियार्षञितो यूनि लुगणिञोः ( २.४.५८) इत्यस्मात् लुक् इत्यस्य अनुवृत्तिः अस्ति। अनुवृत्ति-सहित-सूत्रम्— **धातुप्रातिपदिकयोः सुपः लुक्** |

समस्तपदस्य प्रातिपदिकसंज्ञायाः प्रयोजनं किम् इति प्रश्नः उदेति?

समस्तपदस्य प्रातिपदिकसंज्ञायाः प्रयोजनद्वयं वर्तते। प्रातिपदिकसंज्ञा अस्ति चेत् एव **सुपो धातुप्रातिपदिकयोः** (२.४.७१) इति सूत्रेण समस्तपदस्य अवयवभूतानां सुप् -प्रत्ययानां लुक् भवति । एतत् प्रातिपदिकसंज्ञायाः प्रथमं प्रयोजनम्। समस्तपदस्य प्रातिपदिकसंज्ञा अस्ति चेत् एव सुप् -प्रत्ययाः विधीयन्ते **ङ्याप्प्रातिपदिकात्** ( ४.१.१) इति सूत्रेण। यदा सुप्- प्रत्ययाः विधीयन्ते तदा एव पदत्वं सिद्ध्यति **सुप्तिङन्तं पदम्** (१.४.४१) इति सूत्रेण । **अपदं न प्रयुञ्जीत** इति नियमात् लोके पदम् एव प्रयोक्तव्यम्।

**सुप्तिङन्तं पदम्** (१.४.१४) = सुबन्तानां तिङन्तानां च पदसंज्ञा भवति | तर्हि यस्य पदस्य अन्ते सुप्-प्रत्ययः अस्ति, तत् सुबन्तं; यस्य पदस्य अन्ते तिङ्-प्रप्रत्ययः अस्ति, तत् तिङन्तम् | एकविंशतिः सुप्-प्रत्ययाः सन्ति; अष्टादश तिङ्-प्रत्ययाः सन्ति |

तिङन्तपदम्

धातुभ्यः तिङ्-प्रत्ययानां योजनेन तिङन्तपदं— नाम क्रियापदं— निष्पन्नम् |

सुप्-प्रत्ययाः सङ्ख्यया एकविंशतिः, ते च एते—

**स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्** (४.१.२) =

**स्वौ-जसमौट्-छष्टाभ्याम्-भिस्-ङे-भ्याम्-भ्यस्-ङसि-भ्याम्-भ्यस्-**

**ङसोसाम्-ङ्योस्-सुप्**

सु औ जस्

अम् औट् शस्

टा भ्याम् भिस्

ङे भ्याम् भ्यस्

ङसि भ्याम् भ्यस्

ङस् ओस् आम्

ङि ओस् सुप्

**स्** औ अस्

अम् औ अस्

आ **भ्याम् भिस्**

ए **भ्याम् भ्यस्**

अस् **भ्याम् भ्यस्**

अस् ओस् आम्

इ ओस् **सु**

**4) समासभेदाः**

समासः प्राधान्येन पञ्चधा विभक्तः वर्तते।

अ) अव्ययीभावसमासः;

आ) तत्पुरुषसमासः;

इ) बहुव्रीहिसमासः;

ई) द्वन्द्वसमासः

उ) केवलसमासश्च।

समासे पूर्वपदम् उत्तरपदञ्च भवतः इत्युक्तम् । तत्र पूर्वपदस्य अपि अर्थः अस्ति । उत्तरपदस्य अपि अर्थः अस्ति । कदाचित् पूर्वपदार्थस्य, कदाचित् उत्तरपदार्थस्य, कदाचित् अन्यपदार्थस्य , कदाचित् उभयपदार्थस्य च प्राधान्यं भवति । यस्य पदस्य अर्थः प्रायः क्रियया अन्वितो भवति सः अर्थः प्रधानम् इति उच्यते । यद्यपि अष्टाध्यायां प्राधान्यम् इति विषयः न उक्तः तथापि व्याकरणग्रन्थेषु प्राधान्यम् इति विषयः प्रसिद्धः एव । समस्तपदे किं पदं प्रधानम् इति द्रष्टुं किञ्चित् क्रियापदम् उच्चारणीयम्। ततः पूर्वोत्तरपदार्थयोः मध्ये किं पदं क्रियया अन्वितं भवति इति परिशील्य प्रधान-अप्रधानयोः निर्णयः कर्तव्यः।

प्राधान्यं नाम किम्?

राजदूतः इति एकं समस्तपदम् अस्ति। तस्मिन् पदद्वयम् अस्ति। पूर्वपदं राजा, उत्तरपदं दूतः इति । राजा इति पूर्वपदस्य अर्थः नृपः इति। दूतः इत्युक्ते सेवकः इति अर्थः। राजदूतः इति समासे किं पदं प्रधानम्?

राजा प्रधानः वा, दूतः प्रधानः वा । लोके राजा एव प्रधानः। परन्तु व्याकरणे तथा प्राधान्यं न स्वीक्रियते। तर्हि प्राधान्यनिर्णयः कथं क्रियते ? कश्चित् गुणः अथवा काचित् क्रिया स्वीकर्तव्या;। राजदूतः गच्छति। गच्छति इति गमनक्रिया। गुणवाचकस्य नो चेत् क्रियावाचकस्य योजनं कुर्मः समस्तपदेन सह। इदानीं राजदूतः गच्छति इति वदामः चेत्, अत्र कः गच्छति, राजा वा दूतः वा गच्छति। दूतः एव गच्छति न तु राजा। दूतस्य एव गमनं विवक्ष्यते । अतः अत्र दूतः इत्यस्य एव प्राधान्यं न तु राजा इत्यस्य ।

राजदूतः सुन्दरः। सौन्दर्यम् इति गुणः। अत्र दूतः एव सुन्दरः। दूतस्य एव सौन्दर्यं विवक्ष्यते। अतः अत्र दूतः इत्यस्य एव प्राधान्यं न तु राजा इत्यस्य ।

क्रियायाः गुणस्य च अन्वयं यदा कुर्मः, तदा यः पदार्थः क्रियया, गुणेन सह वा अन्वयं प्राप्नोति, सः प्रधानः इति कथ्यते। समासे पदद्वयं भवति। द्वयोर्मध्ये कस्य पदस्य क्रियया, गुणेन सह अन्वयः भवति, सः पदार्थः प्रधानः भवति। एतत् एव प्राधान्यम् इति उच्यते । भिन्नेषु समासेषु प्राधान्यं कथं भवति इति अग्रे पश्यामः।

अ) **अव्ययीभावसमासः** = अस्मिन् समासे पूर्वपदम् अव्ययम् भवति । **अव्ययीभावः** (२.१.५) इति सूत्रस्य अधिकारे अव्ययीभावसमास-विधानं क्रियते । अव्ययीभावसमासेन
निर्मितस्य शब्दस्य '**अव्ययम्**' इति संज्ञा भवति **अव्ययीभावश्च** (१.१.४१) इति सूत्रेण । अव्ययीभावसमास-संज्ञायाः विधानानन्तरं संपूर्णं समस्तपदम् अव्ययं भवति । अस्मिन् समासे प्रायेण पूर्वपदार्थस्य प्राधान्यम् अस्ति। यथा- वृक्षस्य समीपम् = उपवृक्षम् इति अव्ययीभावसमासः । सः उपवृक्षं वसति। सः वृक्षस्य समीपं वसति। अत्र 'उप' इति पूर्वपदस्य प्राधान्यम् अस्ति। अव्ययीभावसमासः नपुंसकलिङ्गे भवति इत्यतः उपवृक्षम् इति अव्ययं नपुंसकलिङ्गे भवति। अव्ययीभावसमास-सम्बद्धसूत्राणि (२.१.५ – २.१.२१) सन्ति ।

आ) **तत्पुरुषसमासः** = तत्पुरुषसमासे प्रायः उत्तरपदार्थस्य प्राधान्यं भवति। तत्पुरुषसमासस्य चत्वारः प्रभेदाः सन्ति—
सामान्यतत्पुरुषसमासः, कर्मधारयः, द्विगुः, नञ्प्रभृतयः चेति।

यथा- राज्ञः पुरुषः = राजपुरुषः इति षष्ठीतत्पुरुषसमासः। राजपुरुषः गच्छति इत्यत्र पुरुषः इति पदस्य प्राधान्यम् अस्ति ।
एवमेव नीलः मेघः = नीलमेघः इति कर्मधारयसमासः। नीलमेघः वर्षति । अत्र नीलम् इति विशेषणं, मेघः इति विशेष्यम्। मेघः एव वर्षति , अतः मेघस्य प्राधान्यम् अस्ति ।
अष्टानाम् अध्यायानां समाहारः = अष्टाध्यायी इति द्विगुसमासः। सः अष्टाध्यायीं पठति । सः अध्यायान् एव पठति इत्यतः अत्र अध्यायानाम् एव प्राधान्यम् अस्ति ।

अग्रे सूत्रसहितं विवरणं द्रक्ष्यामः। तत्पुरुषसमास-सम्बद्धसूत्राणि (२.१.२२– २.२.२२) सन्ति

इ) **बहुव्रीहिसमासः** = बहुव्रीहिसमासे प्रायः अन्यपदस्य प्राधान्यं भवति । अन्यत् पदं समासाघटकं पदम्। समासाघटकपदस्य अर्थः यदि क्रियया अन्वितः भवति तर्हि बहुव्रीहिसमासः
इति उच्यते। यथा - पीतं क्षीरं यस्य सः = पीतक्षीरः । पीतक्षिरः बालः

गच्छति इति वाक्ये पीतपदस्य क्षीरपदस्य वा अर्थः क्रियया सह न अन्वेति किन्तु समासाघटकस्य बालपदस्य अर्थः क्रियया सह अन्वेति। अतः 'पीतक्षीरः इत्यत्र बहुव्रीहिसमासः भवति। बहुव्रीहिसमासे अन्यपदार्थस्य प्राधान्यम् अस्ति। बहुव्रीहिसमास-सम्बद्धसूत्राणि (२.२.२३ – २.२.२८ ) सन्ति ।

ई) **द्वन्द्वसमासः** = द्वन्द्वसमासे प्रायः उभयपदार्थस्य प्राधान्यं भवति। उभयोः पदयोः अर्थस्य अपि यदि क्रियया अन्वयो भवति तर्हि द्वन्द्वसमासः इति उच्यते । रामलक्ष्मणौ कार्यं कुरुतः
इति वाक्ये रामपदस्य लक्ष्मणपदस्य च क्रियायाम् अन्वयः वर्तते । अतः अत्र उभयपदार्थस्य प्राधान्यं भवति। तस्मात् द्वन्द्वः इति उच्यते ।
समस्तपदस्य लिङ्गं प्रायः उत्तरपदस्य लिङ्गं
भवति। द्वन्द्वसमास-सम्बद्धसूत्राणि (२.२.२९ – २.२.२९) सन्ति ) ।

उ) **केवलसमासः** – केवलसमासः विशेषसंज्ञाविनिर्मुक्तः । व्यवहारे सुबन्तस्य समर्थसुबन्तेन सह समासः भवति चेत् तत्र केवलसमासः इति उच्यते। समासः भवति परन्तु विशिष्टसमास-संज्ञा न दीयते। अतः एव अत्र केवलं सामान्यसमास-संज्ञा एव विधीयते न तु विशिष्टा समाससंज्ञा यथा तत्पुरुषः, द्वन्द्वः, अव्ययीभावः इत्यादयः। भूतपूर्वः इति समस्तपदम् अस्ति। अयं केवलसमासः इति उच्यते यतोहि अत्र विशिष्ट-समास-विधायक-सूत्रं नास्ति। अतः भूतपूर्वः इति समासः केवलसमासः । पूर्वं भूतः इति लौकिक-विग्रहवाक्यम्।

**इवेन सह समासः विभक्त्यलोपश्च** इति वार्तिकम्। अनेन वार्तिकेन इव इति अव्ययेन सह समासः भवति अपि च पूर्वपदात् विभक्तिप्रत्ययस्य लोपः न भवति । यथा - **वार्गर्थौ इव** इति लौकिकविग्रहवाक्यं, तस्य समासः वागर्थाविव इति भवति। विग्रहस्य, समासस्य च भेदः न ज्ञायते यतोहि विभक्तेः लोपः नास्ति। एतदपि केवलसमासस्य उदाहरणम् । अस्मिन् उदाहरणे इव इति पदेन सह समासः अस्ति, पूर्वपदस्य विभक्तेः लोपः न जातः। वाक् च अर्थः च इति वागर्थौ इति द्वन्द्वसमासः, तदनन्तरं वागर्थौ+इव इति केवलसमासः। अत्र वागर्थौ इति पूर्वपदस्य विभक्तेः लोपः न भवति **इवेन सह समासः विभक्त्यलोपश्च** इति वार्तिकेन।

अग्रे प्रत्येकं समासस्य विषये सूत्रसहिता दृष्टिः परिशील्यते।

सारांशः

आदौ समासस्य समाससंज्ञा भवति **प्राक्कडारात्समासः** (२.१.३) इति सूत्रेण। समाससंज्ञानन्तरं समासस्य विशेषसमाससंज्ञा भवति, यथा अव्ययीभावसमासः, तत्पुरुषसमासः, बहिव्रीहिसमासः, द्वन्द्वसमासः चेति । अष्टाध्यायां चत्वारः अधिकाराः सन्ति- **अव्ययीभाव-अधिकारः, तत्पुरुष-अधिकारः, बहुव्रीहि-अधिकारः, द्वन्द्व-अधिकारः** चेति। प्रत्येकस्मिन् अधिकारे समासविधायकसूत्राणि सन्ति । यथा → **षष्ठी** (२.२.८) इति सूत्रेण षष्ठ्यन्तं सुबन्तं सुपा सह समस्यते। समाससम्बद्धसूत्रेषु यत्र यत्र सुप् इति पदम् अपि च सुपा इति पदं अनुवृत्तं भवति तत्र सुप् इत्युक्ते सुबन्तं पदं, सुपा इत्युक्ते सुबन्तेन पदेन इत्यर्थः |

**समासप्रक्रिया**

१) समासविधानम्

२) समासकृते **कृत्तद्धितसमासाश्च** (१.२.४६) इति सूत्रेण प्रातिपदिकसंज्ञा

३) पूर्वोत्तरपदयोः विभक्तिप्रत्ययस्य लोपः **सुपो धातुप्रातिपदिकयोः** (२.४.७१) इति सूत्रेण

४) पूर्वनिपातः

५) पूर्व-उत्तरपदयोः विशिष्टकार्याणि

६) सन्धिः

७) समस्तपदात् सुबुत्पत्तिः - सामान्यतः प्रथमाविभक्तौ एकवचनप्रत्ययः सु इति।

**अभ्यासः**

एतेषु सूत्रेषु उपसर्जनं किम् अपि च कस्य पदस्य पूर्वनिपातः भवति इति वक्तव्यम् ।

1) द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ( २.१. २४)

2) तृतीया तत्कृतार्थेन गुणवचनेन (२.१.३०)

3) चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः (२.१.३६)

4) पञ्चमी भयेन (२.१.३७)

5) अव्ययं विभक्ति-समीप-समृद्धि-व्यृद्धि-अर्थाभाव-अत्यय-असम्प्रति-शब्दप्रादुर्भाव-पश्चाद् -यथा-आनुपूर्व्य-यौगपद्य-सादृश्य-सम्पत्ति-साकल्यान्तवचनेषु (२.१.६)

इत्यनेन समासपरिचयः इति विषयः समाप्तः।

Vidhya - March 2020

-----------------------------------------

धेयम्-- If you would like to receive notification via email whenever a new page (new lesson) gets added to our site, click here and fill in your email address. New lessons are added every few weeks.

Also we have multiple classes conducted via conference call, on the subjects of Paniniiya Vyakaranam, Nyaya shastram, and also a bhAShA-varga for those wanting to refine their language skills. All classes are free, and people can join from anywhere in the world via local phone call or internet, whichever is more convenient. For class schedules and connect info, click here.

To join a class, or for any questions feel free to contact Swarup <dinbandhu@sprynet.com>.

Č

Add files